तत्तद्व्यक्तिवारकम्। तत्र एवंविधस्थले सामान्यव्याप्ते प्रसिद्धत्वाद् उदाहरणेन तामेव दर्शयति—यद् यदिति। अत्र सिंहज्ञानमात्रे भयकारणत्वज्ञानमौत्सर्गिकमित्यभिप्रायेण साध्यांशे भयकारणेति। तेन प्रकृतानुमितिहेतौ भयकारणत्वस्याघटकत्वेन तादृशोदाहरणमप्रासङ्गिकमित्याशङ्काया नावसर। एवञ्च यद् यत् स्थान अवीरपुरुषीयानिष्टाननुबन्धीष्टसाधनत्वेन सम्भावितभ्रमणक तत्तद् भयकारणाभावप्रकारकज्ञानविशेष्यमिति स्थिते व्याप्तिशरीरे व्यापकस्य भयकारणाभावप्रकारकज्ञानविशेष्यत्वस्य अभावेन व्याप्यस्य अवीरपुरुषीयानिष्टाननुबन्धीष्टसाधनत्वप्रकारकसम्भावनाविषयभ्रमणकत्वस्य अभाव सिध्यति, व्यापकाभावेन व्याप्याभावसिद्धे सर्वसम्मतत्वादित्यभिप्राय। तादृशव्यापकाभावस्य सिद्धिमेव दर्शयति—गोदावरीतीरे चेति। गोदावरीतीरवासिसिंहस्य अत्रोपलब्धिरिति तदर्थ। यथाश्रुते तु गोदावरीतीरे यदि सिंहोपलब्धिविशेष्य तदा एतत्स्थाने भ्रमणे न बाधकमिति बोध्यम्। एतद्देशस्यापि गोदावरीतीरत्वाभिप्राये तु यथाश्रुतमेव सम्यक्। व्यापकविरुद्धेति, भयकारणाभावप्रकारकज्ञानविशेष्यत्व व्यापकं तद्विरुद्ध भयकारणप्रकारकज्ञानविशेष्यत्वमेव, तस्य उपलब्धे सद्धेतुस्थले तज्ज्ञानादित्यर्थ। ईदृशव्यापकविरुद्ध एव व्यापकाभावेन व्याप्याभावानुमाने व्यापकाभावत्वेन विवक्षित।

एतन्निरस्यति—अत्रोच्यत इति। गुरोरित्यादे अनैकान्तिको हेतुरित्यन्तस्य ग्रन्थस्य अयमभाव—यादृश स्थान भयकारणवत्तया ज्ञात तत्र सञ्चरणे यदि गुरुनिर्देशादिरूपतद्ग तदुल्लङ्घनादौ यादृशानिष्टसम्भावना, कथञ्चित् परित्राणस्यापि सम्भवेन सिंहादिभयकारणविशिष्टे भ्रमण न तदपेक्षया अनिष्टानुबन्धीति औत्सर्गिकज्ञानेन, सिंहादिभयकारणवत्तया ज्ञाते यस्मिन् स्थाने भीरुपुरुषीयानिष्टाननुबन्धीष्टसाधनभ्रमणकत्वरूपो हेतुरस्ति न तत्र भयकारणाभावप्रकारकज्ञानविशेष्यत्वरूप साध्यमिति व्यभिचारेण निरुक्त साध्य न हेतोर्व्यापकम्, तथाच व्यापकाभावाद्व्याप्याभाव इति रीतेरत्रानुसरण दुरुपराहतमिति। ननु तादृशस्थले सिंहादभीतानां वीराणां भयकारणाभावप्रकारक यज्ज्ञान तद्विशेष्यत्वरूपं साध्यमप्यस्तीत्यतो न व्यभिचार इति चेत् तत्राह—शुन इति। अस्यायमभिप्राय, भीरुपुरुषीयानिष्टाननुबन्धीष्टसाधनभ्रमणकत्वरूपस्य हेतोर्गृहाङ्गणादौ सत्त्वेन तत्र वीरत्वेन सिंहादभीतानां वस्तुवैचित्र्याच्च शुनोऽपि भीतानाम्, अशौचपिशाचाक्रान्तानां धार्मिकादीनां च भयकारणप्रकारकज्ञानविशेष्यत्वरूपस्य निरुक्तसाध्यविरुद्धधर्मस्य सत्त्वेन उक्तहेतो साध्यविरुद्धव्याप्यत्वरूप विरुद्धत्वमिति। अथ तथाप्युक्त विरुद्धत्वं न सङ्गच्छते, तथाहि उक्तहेतोरधिकरणमात्रे एव कस्यचित् भयकारणाभावप्रकारकज्ञानसम्भवेन तद्विशेष्यत्वस्य तत्र सत्त्वाद् व्यभिचार एव न सम्भवति का कथा विरोधस्येति चेत् तदुभयमपहाय असिद्धिरूप दोषान्तरमाह—गोदावरीतीरे सिंहसद्भाव इति। तद्ग्रन्थाशयस्तु—प्रतिपाद्यधर्मिकेण तावत् सद्धेतुस्थाने सिंहवत्तया ज्ञातत्वेन हेतुना अनिष्टसाधनभ्रमणकत्वमनुमाय ततो निवर्तितव्यम्, तस्य सिंहवत्ताज्ञानं तु शाब्दबोध, शाब्दबोधे अप्रामाण्यशङ्का तु तज्जनकशब्दे आप्तोक्तत्वानिश्चयेन भवति, ग्राम्यस्त्रीप्रयुक्ते वचसि तु आप्तोक्तत्वनिश्चायका-

तथा नि.शेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादी न्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नान कार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि। व्यक्तिवादिना च (A)अधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्।

तथेति दूती उपनायकोपभुक्ता चन्दनच्यवनादिमत्त्वादित्यनुमाने व्यभिचार इत्यर्थ। न च चन्दनच्यवनादौ वैलक्षण्यविवक्षणात् न व्यभिचार इति वाच्य शब्दात तदनुपस्थिते। नन्वीदृशात् तत कथमुपभोगस्य व्यञ्जनाऽपीत्यत आह—व्यक्ति वादिना चेति व्यञ्जनावादिना चेत्यर्थ। अधमपदसहायानामिति दूतीत्वेनैव नैवाधमत्वमित्यभिप्राय। एतदपि दूतीप्रेषणकृतमङ्कुतनायकाभिप्रायेणैवोक्तम् तदन्य नायकपक्षे तु दूतीप्रेषणमपेक्षत्वेनाप्यधमात्तिसम्भवात् न तत्सहायतत्यवधेयम्।

---

भावेन तादृशबोधे अप्रामाण्यशङ्का औत्सर्गिकी। तथाच ज्ञानधार्मिकाप्रामाण्यसन्देहस्य विपर्ययसंशयपर्यवसानवद् वचने आप्तोक्तत्वानिश्चयेन प्रतिपाद्यधार्मिकस्य सिद्धवत्तया ज्ञान मप्रामाण्यशङ्काकलङ्कितमिति सङ्केतस्थानरूप एव अप्रामाण्यज्ञानानास्कन्दितहेतुनिश्चय एवं नास्तीति कथं तस्य एतत् स्थानं मम भ्रमणानर्हमित्यनुमिते सम्भव इति। अथनाप्रति बन्धात् अर्थेन सह व्याप्यव्यापकभावरूपसम्बन्धविरहादित्यर्थ। एतेन प्रवृत्त्यौपयिकशाब्द बोधे वाक्य आप्तोक्तत्वनिश्चयोऽपेक्षित इति सूचितम्।

अथ तथाऽपि अप्रामाण्यसन्देहकारणस्य तत्रानुपलब्धेरस्ति तस्य अप्रामाण्यज्ञानानास्कन्दित हेतुज्ञानम् ततश्चानुमितिर्निष्प्रत्यूहेति चेत् एतदस्वारस्येनैव नि शेषत्यादौ हेतोर्व्यभिचार-प्रदर्शनमिति सुधीभिर्विभावनीयम्।

(A) अधमेति। तत्र दूतीप्रेषणसापेक्षतया यादृशमधमत्व तदपेक्षया पूर्वकृतापराधम अधमत्वस्य गरीयस्त्व परिस्फुटमिति उभयसाधारणार्थप्रतिपादक नि शेषच्युता त्यिदापेक्षया अधम-पदस्य प्राधान्येन सहायत्वमिति बोध्यम्। इदानीन्तनदूतीरन्तुल्येन प्राधान्यं तु प्रत्युक्त-मधस्तात् ( २९ पृष्ठे )।

न चात्र अधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्? एवंविधादर्था-देवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तद् अदूषणम्।

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो
नाम पञ्चम उल्लास ॥ ५ ॥

---

नन्वेव मयाऽपि अधमसन्निहितप्रेषितत्वे सतीति हेतुविशेषण देयमित्यत आह—न चेति, आरोप्यतिन्द्रयाऽप्यधमोक्तिसम्भवादिति भाव। ननु तत्रापि कथमेवं-विधादर्थादुपभोगव्यञ्जनेत्यत आह—**एवंविधादिति**। 'उपपत्ति' अव्यभिचारादि। '**तददूषणमिति**, व्यञ्जनया प्रतिपादने अव्यभिचारादेरनपेक्षणादिति भाव'*।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते काव्यप्रकाशादर्शे
गुणीभूतव्यङ्ग्यनिर्णयस्य पञ्चम प्रतिबिम्ब।

